# चक्रपूजा के स्तोत्र

[संशोधित व परिवर्धित संस्करण]

सम्पादक

'कुल-भूषण' पं० रमादत्त शुक्ल, एम० ए०

प्रकाशक

कल्याण मन्दिर प्रकाशन

अलोपीबाग मार्ग, प्रयाग—२११००६

तृतीय संस्करण] भाद्र पूर्णिमा २०३९ [मूल्य ४-००

प्रकाशक

कल्याण मन्दिर प्रकाशन

(धार्मिक पुस्तकों के प्रकाशक-विक्रेता)

अलोपीबाग मार्ग, प्रयाग—६.



तृतीय संस्करण : भाद्र पूर्णिमा सं० २०३६

मुद्रक :

परा-वाणी प्रेस

अलोपीबाग मार्ग

प्रयाग—६

# भूमिका

'चक्र-पूजा' का विशेष महत्व है। यह विशिष्ट पूजा 'निशार्चन,' 'रहस्य-पूजा' आदि नामों से भी साधकों में प्रसिद्ध है। इस पूजा का पूर्ण विधान 'श्री बाला-नित्यार्चन' जैसी पूजा-पद्धत्यात्मक पुस्तकों से जाना जा सकता है। उसके अनुसार इष्ट-देवता की उपस्थिति में साधक परस्पर पूजन कर तर्पण-चर्वण करतेहैं। उस अवसर पर जिन स्तोत्रों का पाठ साधकों को करना होता है, उन्हें पहले पहल इस पुस्तक के रूप में व्यवस्थित ढंग से संग्रहीत किया गया।

साधकों ने इस पुस्तक का हृदय से स्वागत किया। फलतः उसके इस तीसरे संस्करण को मोटे अक्षरों में मुद्रित कराने के साथ ही तीन और उपयोगी विषयों—१ इष्ट-ध्यानावली, २ श्री गुरुदेव का ध्यान, ३ आवश्यक निर्देश—को इसमें बढ़ा दिया गया है। इसके सिवा जो त्रुटियाँ पिछले संस्करण में थीं, उन्हें दूर कर दिया गया है। आशा है कि साधक बन्धु इस संस्करण से और अधिक लाभ उठा सकेंगे।

—'कुल-भूषण'

प्रयाग

आश्विन प्रतिपदा, २०३९

# अ-नु-क्र-म-णि-का

# इष्ट-ध्यानावली

'चक्र-पूजा' के अधिकारी व्यक्तियों की इष्ट-देवता दश महा-विद्याओं में से ही कोई महा-विद्या होती हैं और नियमानुसार द्वितीय पात्र के स्वीकार करने के बाद अपने इष्ट का ही ध्यान करना होता है, अतः साधकों की सुविधा के लिये उक्त महा-विद्याओं के प्रसिद्ध ध्यान यहाँ उद्धृत किये जा रहे हैं—

## १ श्री काली

शवारूढां महा-भीमां घोर-दंष्ट्रां हसन्मुखीम्,
चतुर्भुजां खड्ग-मुण्ड-वराभय-करां शिवाम् ।
मुण्ड-माला-धरां देवीं ललज्जिह्वां दिगम्बराम् ।।
एवं सञ्चिन्तये कालीं श्मशानालय-वासिनीम् ।।

## २ श्री तारा

प्रत्यालीढ-पदार्पितांघ्रि-शव-हृद्-घोराट्टहासा परा,
खड्गेन्दीवर-कर्त्रि-खर्पर-भुजा हुङ्कार-बीजोद्भवा ।
खर्वा नील-विशाल-पिङ्गल-जटा-जूटैक - नागैर्युता,
जाड्यं न्यस्य कपाल-कर्तृ-जगतां हन्त्युग्रतारा स्वयम् ।।

# ३ श्री षोडशी

## (१) श्री बाला त्रिपुरसुन्दरी

अरुण-किरण-जालैरंजिता सावकाशा,
विधृत-जप-वटीका पुस्तकाभीति-हस्ता ।
इतर-कर-वराढ्या फुल्ल-कह्लार-संस्था,
निवसतु हृदि बाला नित्य-कल्याण-शीला ॥

## (२) श्री ललिता त्रिपुरसुन्दरी

सिन्दूरारुण-विग्रहां त्रि-नयनां माणिक्य-मौलि-स्फुरत्-
तारा-नायक-शेखरां स्मित-मुखीमापीन-वक्षोरुहाम् ।
पाणिभ्यामलि-पूर्ण-रत्न-चषकं रक्तोत्पलं बिभ्रतीम्,
सौम्यां रत्न-घटस्थ-रक्त-चरणां ध्याये परामम्बिकाम् ॥

## (३) श्री षोडशी महा-त्रिपुरसुन्दरी

बाल-व्यक्त-विभाकरामित-निभां भव्य-प्रदां भारती-
मीषत्-फुल्ल-मुखाम्बुज-स्मित-करैराशा-भवान्धापहां ।
पाशं साभयमंकुशं च वरदं संविभ्रतीं भूतिदां,
भ्राजन्तीं चतुराम्बुजाकृति-करैर्भक्त्या भजे षोडशीम् ॥

## ४ श्री भुवनेश्वरी

उद्यद्दिन-द्युतिमिन्दु-किरीटां, तुङ्ग-कुचां नयन-त्रय-युक्तां ।
स्मेर-मुखीं वरदांकुश-पाशाभीति-करां प्रभजे भुवनेशीं ।।

## ५ श्री छिन्नमस्ता

प्रत्यालीढ-पदां सदैव दधतीं छिन्न शिरः कर्त्रिकाम्,
दिग्वस्त्रां स्व-कबन्ध-शोणित-सुधा-धारां पिबन्तीं मुदा।
नागाबद्ध-शिरोमणिं त्रि-नयनां हृद्युत्पलालंकृताम्,
रत्यासक्त-मनोभवोपरि दृढां ध्याये छिन्न-मस्तकाम् ।।

## ६ श्री भैरवी

उद्यद्-भानु-सहस्र-कान्तिमरुण-क्षौमां शिरो-मालिकाम्,
रक्तालिप्त-पयोधरां जप-पटीं विद्यामभीतिं वरम् ।
हस्ताब्जैर्दधतीं त्रिनेत्र-विलसद् वक्त्रारविन्द-श्रियम्,
वन्दे बद्ध-हिमांशु-रत्न-मुकुटां मन्द-स्मितां भैरवीम् ।।

## ७ श्री धूमावती

धूम्राभां धूम्र-वस्त्रां प्रकटित-दशनां मुक्त-बालाम्बराढ्यां,
काकाङ्क-स्यन्दनस्थां धवल-करयुगां शूर्प-हस्तातिरूक्षाम्।
नित्यं क्षुत्क्षांत-देहां मुहुरति-कुटिलां वारि-वांछा-विचित्तां
ध्याये धूमावतीं वाम-नयन-युगलां भीतिदां भीषणास्यां ।।

## ८ श्री बगलामुखी

सौवर्णासन-संस्थितां त्रिनयनां पीतांशुकोल्लासिनीम्,
हेमाभाङ्ग-रुचिं शशाङ्क-मुकुटां स्रक्-चम्पक-स्रग्-युताम् ।
हस्तैर्मुद्गर-पाश-बद्ध-रसनां संबिभ्रतीं भूषण—
व्याप्ताङ्गीं बगलामुखीं त्रि-जगतां संस्तम्भिनीं चिन्तये ।।

## ९ श्री मातंगी

श्यामां शुभ्रांशु-भालां त्रि-कमल-नयनां रत्न-सिंहासनस्थां,
भक्ताभीष्ट-प्रदात्रीं सुर-निकर-करासेव्य-कंजांघ्रि-युग्मां ।
पाशं खड्गं चतुर्भिर्वर-कमल-करैः खेटकं चांकुशं च,
मातङ्गीमावहन्तीमभिमत-फलदां मोदिनीं चिन्तयामि ।।

## १० श्री कमला

आसीना सरसीरुहे स्मित-मुखीं हस्ताम्बुजैर्बिभ्रती,
दानं पद्म-युगाभये च वपुषा सौदामिनी-सन्निभा ।
मुक्ता-हार- विराजमान - पृथुलोत्तुङ्ग - स्तनोद्भासिनी,
पायाद् वः कमला कटाक्ष-विभवैरानन्दयन्ती हरिम् ।।

• • •

# चक्रपूजा के स्तोत्र

## ( १ )

### गुरु-पादुका स्तुति *

नमस्ते भगवन्नाथ ! शिवाय गुरु-रूपिणे ।
विद्यावतार-संसिद्ध्यै स्वीकृतानेक-विग्रह ।। १

नवाय नव-रूपाय परमात्मैक-रूपिणे ।
सर्वाज्ञान-तमो-भेद-भानवे चिद्-घनाय ते ।। २

स्वतन्त्राय दया-क्लृप्त-विग्रहाय शिवात्मने ।
पर-तन्त्राय भक्तानां भव्यानां भव्य-रूपिणे ।। ३

विवेकिनां विवेकाय विमर्शाय विमर्शिनाम् ।
प्रकाशिनां प्रकाशाय ज्ञानिनां ज्ञान-रूपिणे ।। ४

पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः ।
सदा सच्चित्त-रूपेण विधेहि भवदासनम् ।। ५

अज्ञान-तिमिरान्धस्य ज्ञानाञ्जन-शलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।। ६

नमोऽस्तु गुरवे तुभ्यं ब्रह्म-विष्णु-शिवात्मने ।
अविद्या-ग्रस्त - संसार-सागरोत्तार-हेतवे ।। ७

---

* अर्चन में शक्ति आदि की पूजा के पहले गुरुदेव का स्तवन किया जाता है। यहाँ ऐसे चार स्तवन दिये गये हैं। इनमें से किसी एक का पाठ साधक करता है।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ज्ञानं गुरुरेव परं तपः ॥ ८

अतः सर्वत्र देवेशि ! गुरु-पूजा गरीयसी ।
अन्य-देव-सपर्या वा चान्य-देवस्य कीर्तनम् ॥ ९

गुरु-देवं विना देवि ! तदग्रे क्रियते यदि ।
तदा नरकमाप्नोति सत्यमेतद् वदाम्यहम् ॥ १०

पूजिते गुरु-पादे वै सर्वदैव सुखी भवेत् ।
सर्वेषां मन्त्र-तन्त्राणां पिताऽसौ यः सदाशिवः॥ ११

यस्य भक्तिर्गुरौ नित्यं वर्तते देव-वत् प्रिये !
तस्य सर्वार्थ-सिद्धिः स्यान्नान्यथा खलु पार्वति॥ १२

॥ गन्धर्व-तन्त्रे षष्ठ-पटले गुरु-पादुका-स्तुतिः ॥

## गुरु-अष्टक

ब्रह्म-स्थान-सरोज-मध्य-विलसच्छीतांशु-पीठ-स्थितम् ।
स्फूर्जत्-सूर्य-रुचिं वराभय-करं कर्पूर-कुन्दोज्ज्वलम् ।।
श्वेत-स्रग्-वसनानुलेपन-युतं विद्युद्-रुचा कान्तया ।
संश्लिष्टार्ध-तनुं प्रसन्न-वदनं वन्दे गुरुं सादरम् ।। १

मोह-ध्वान्त-महान्ध-विग्रह-वतां चक्षूंषि चोन्मीलयन्-
श्चक्रे रुचिराणि तानि दयया ज्ञानांजनाभ्यञ्जनै-
र्व्याप्तं यन्महसा जगत्-त्रयमिदं तत्त्व-प्रबोधोदयं ।
तं वन्दे शिव-रूपिणं निज-गुरुं सर्वार्थ-सिद्धि-प्रदम् ।। २

मातङ्गी भुवनेश्वरी च वगला धूमावती भैरवी ।
तारा छिन्न-शिरो-धरा भगवती श्यामा रमा सुन्दरी ।।
दातुं न प्रभवन्ति वाञ्छित-फलं यस्य प्रसादं विना ।
तं वन्दे शिव-रूपिणं निज-गुरुं सर्वार्थ-सिद्धि-प्रदम् ।। ३

काशी द्वारवती प्रयाग-मथुरायोध्या गयावन्तिका ।
माया-पुष्कर-काञ्चिकोत्कल-गिरिः श्रीशैल-विन्ध्यादयः।।
नैते तारयितुं भवन्ति कुशला यस्य प्रसादं विना ।
तं वन्दे शिव-रूपिणं निज-गुरुं सर्वार्थ-सिद्धि-प्रदम् ।। ४

रेवा सिन्धु सरस्वती त्रि-पथगा सूर्यात्मजा कौशिकी ।
गङ्गा-सागर-सङ्गमाद्रि-तनया लौहित्य-शोणादयः ॥
नैते तारयितुं भवन्ति कुशला यस्य प्रसादं विना ।
तं वन्दे शिव-रूपिणं निज-गुरुं सर्वार्थ-सिद्धि-प्रदम् ॥ ५

सत्कीर्तिर्विमलं यशः सु-कविता पाण्डित्यमारोग्यता ।
वादे वाक्-पटुता कुले चतुरता गाम्भीर्यमक्षोभिता ॥
प्रागल्भ्यं प्रभुताग्रणे निपुणता यस्य प्रसादाद् भवेत् ।
तं वन्दे शिव-रूपिणं निज-गुरुं सर्वार्थ-सिद्धि-प्रदम् ॥ ६

ध्यानं दैवत-पूजनं गुरु-तपो दानाग्नि-होत्रादयः ।
पाठो होम-निषेवनं पितृ-मखाद्यभ्यागतार्चाविलिः ॥
एते व्यर्थ-फला भवन्ति नियतं यस्य प्रसादं विना ।
तं वन्दे शिव-रूपिणं निज-गुरुं सर्वार्थ-सिद्धि-प्रदम् ॥ ७

लोकेशो हरिरम्बिका स्मर-हरो माता-पिताभ्यागताः।
आचार्याः कुल-पूजिता पति-वरा वृद्धास्तथा भिक्षुका॥
नैते तारयितुं भवन्ति कुशला यस्य प्रसादं विना ।
५ तं वन्दे शिव-रूपिणं निज-गुरुं सर्वार्थ-सिद्धि-प्रदम् ॥ ८

पूर्वाशाभिमुखः कृतांजलि-पुटः श्लोकाष्टकं यः पठेत् ।
पौरश्चर्य-विधिं विनापि लभते मन्त्रस्य सिद्धिं परां ॥
नो विघ्नैः परि-भूयते प्रति-दिनं प्राप्नोति पूजा-फलं ।
देहान्ते परमं पदं निवसते यद् योगिनां दुर्लभम् ॥ ९

॥ श्रीवामकेश्वर-तन्त्रे उमा-महेश्वर-सम्वादे गुर्वष्टकम् ॥

## गुरु-स्तुति

अज्ञान-तिमिरान्धस्य ज्ञानाञ्जन-शलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ।। १

अखण्ड-मण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ।। २

विश्वात्मकः परः शम्भुर्विश्वोत्तीर्णोऽस्म्यहं दृढम् ।
इति यस्याज्ञया तस्मात् तस्य श्रीपादुका-स्मृतिः ।। ३

सहस्रारे पद्मे विगत-शशठस्त्रान्तर-गतं ।
सदा देवैर्वन्द्यं भव-भय-विनाशैक-करणं ।।
वराभी पाणिभ्यां प्रकटित-समन्द-स्मित-मुखं ।
नमामीदृग्-रूपं परम-गुरु-रूपं स-करुणम् ।। ४

शान्तं शुक्ल-कलेवरं त्रि-नयनं कान्ताङ्ग-भूषं शिवं ।
वांछाभीति-करं प्रचण्ड-तिमिराज्ञान-प्रकाशं रविं ।।
नित्यं नौमि रविं तथाब्धि-तरणे तं कर्ण-धारं गुरुं ।
यस्य श्रीपद-पङ्कजोद्भव-सुधा सिद्धैः सदा पीयते ।। ५

सदा विधोर्मण्डल-मध्य-संस्थं नमामि नित्यं गुरु-पाद-पद्मं ।
प्रसादतो यस्य मया प्रलब्धं स-वासनाज्ञान-विनाश-वीजं ।।

पद्मोद्भवे सम-कला-पतयोऽपि नित्यम्,
यस्यांघ्रि-पद्ममसलं परि-भावयन्ति ।
कारुण्य-वारिधिरशेष-गुणैक-राशिः,
सोऽयं गुरुः शिरसि शुक्ल-सरोज-मध्ये ॥ ७

प्रबद्धानां पाशैः सकल-गुण-माया-मयै-
र्निमग्नानां नित्यं भव-जल-निधेरन्तर-गतः ।
कृपा-लेशो बन्धं परि-हरति यस्यांघ्रि-तरगः,
प्रवन्दे सानन्दं तमपि गुरु-रूपं सकरुणम् ॥ ८

कवित्वं पाण्डित्यं त्रिभुवन-पतित्वं न हि कदा ।
न वा स्वर्गं सिद्धि न सुर-वर-साम्यं च नियतं ॥
न वाञ्छामो मोक्षं पुर-हर-पदं नैव शिवताम् ।
यदि स्याच्चेतो मे निरवधि गुरोः पाद-कमलं ॥ ९

॥ कौलावली-निर्णये प्रथमोल्लासे गुरु-स्तुतिः ॥

## गुरु-स्तोत्र

ज्ञानात्मानं परमात्मानं दानं ध्यानं योगं ज्ञानम् ।
जानन्नपि तत् सुन्दरि मातर्नं गुरोरधिकं न गुरोरधिकं ॥ १

प्राणं देहं गेहं राज्यं भोगं मोक्षं भक्ति पुत्रम् ।
मन्ये मित्रं वित्त-कलत्रं न गुरोरधिकं न गुरोरधिकम् ॥ २

वानप्रस्थं यति-विध-धर्मं पारमहंस्यं भिक्षुक-चरितम् ।
साधोः सेवा बहु-सुर-भक्तिर्नं गुरोरधिकं न गुरोरधिकम् ॥ ३

विष्णोर्भक्तिः पूजन-चरितं वैष्णव-सेवा मातरि भक्तिः ।
विष्णोरिव पितृ-सेवन-योगो न गुरोरधिकं न गुरोरधिकम् ॥ ४

प्रत्याहारं चेन्द्रिय-जयता प्राणायामं न्यास - विधानम् ।
इष्टैः पूजा जप-तप-भक्तिर्न गुरोरधिकं न गुरोरधिकम् ॥ ५

काली दुर्गा कमला भुवना त्रिपुरा भीमा बगला पूर्णा ।
श्रीमातङ्गी धूमा तारा एता विद्या त्रिभुवनसारा न गुरोरधिकं ॥ ६

मात्स्यं कौर्मं श्रीवाराहं नर-हरि-रूपं वामन-चरितम् ।
अवतारादिकमन्यत् सर्वं न गुरोरधिकं न गुरोरधिकम् ॥ ७

श्रीरघु-नाथं श्रीयदु-नाथं श्रीभृगु-देवं बौद्धं कल्किम् ।
अवतारानिति दशकं मन्ये न गुरोरधिकं न गुरोरधिकम् ॥ ८

गङ्गा काशी काञ्ची द्वारा मायायोध्यावन्ती मथुरा ।
यमुना रेवा पर-तर-तीर्थं न गुरोरधिकं न गुरोरधिकम् ॥ ९

गोकुल-गमनं गोपुर-रमणं श्रीवृन्दावन-मधुपुर-सटनम् ।
एतत् सर्वं सुन्दरि मातर्न गुरोरधिकं न गुरोरधिकम् ॥ १०

तुलसी-सेवा हरि-हर-भक्तिर्गङ्गा-सागर-सङ्गम-मुक्तिः ।
किमपरमधिकं कृष्णे भक्तिः एतत् सर्वं सुन्दरि मातर्न गुरोरधिकं

एतत् स्तोत्रं पठति च नित्यं मोक्ष-ज्ञानी सोऽप्यति-धन्यः ।
ब्रह्माण्डान्तर्यद्-यद् ज्ञेयं सर्वं न गुरोरधिकं न गुरोरधिकम् ॥ १२

॥ वृहत्-पारमहंस्यां संहितायां श्रीशिव-पार्वती-सम्वादे
श्रीगुरु-स्तोत्रम् ॥

## कुलाङ्गना-स्तोत्र *

मातर्देवि ! नमस्तेऽस्तु ब्रह्म-रूप-धरेऽनघे !
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ १
माहेशि ! वरदे देवि ! परमानन्द-रूपिणि !
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ २
कौमारि ! सर्व-विघ्नेशे ! कुमार-क्रीडने! परे !
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ ३
विष्णु-रूप-धरे देवि ! विनता-सुत-वाहिनि !
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ ४
वाराहि ! वरदे देवि ! दंष्ट्रोद्धृत-वसुन्धरे !
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ ५
शक्र-रूप-धरे देवि ! शक्रादि-सुर-पूजिते ।
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ ६
चामुण्डे! मुण्ड-मालासृक्-चर्चिते! विघ्न-नाशिनि!
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ ७

---

* शक्ति का पाद्यादि उपचारों से पूजन करने के बाद इस स्तोत्र से स्तुति की जाती है। कहीं-कहीं शक्ति के पात्र का प्रसाद पाने पर यह स्तुति पढ़ते हैं।

महालक्ष्मि! महोत्साहे! क्षोभ-सन्ताप-नाशिनि !
कृपया हर मे विघ्नं मन्त्र-सिद्धिं प्रयच्छ मे ॥ ८

मिति-मातृ-मये देवि ! मिति-मातृ-बहिष्कृते !
एके बहु-विधे देवि ! विश्व-रूपे! नमोऽस्तु ते ॥ ९

एतत् स्तोत्रं पठेद् यस्तु कर्मारम्भेषु संयतः ।
विदग्धां वा समालोक्य तस्य विघ्नं न जायते ॥ १०

॥ श्रीविद्यार्णवे सप्त-दश-श्वासे कुलाङ्गना-स्तोत्रम् ॥

## शक्ति-स्तोत्र

ॐ नमामि ते देवि ! पदारविन्दं तवाश्रयामि प्रणमामि नित्यं ।
धेयामि गायामि वदामि नित्यमेवं करोतु मम चित्त-वृत्तिः ॥
सीमन्तिनी काञ्चन-कान्ति-वर्णा कादम्बरी घूर्णित-नेत्र-पद्मा ।
कदम्ब-मालाञ्चित-केश-पाशा कलावती कौलिक-चक्रवर्ती ॥
कन्दर्प-दर्पा दर-दीर्घ-नेत्रा मुदावती बान्धव-चारु-वक्त्रा ।
कला कलापा कल-हंस-नादा कलावती काम-कला-विलासा ॥
यत्रैव सङ्गः कुल-सुन्दरीणां देशान्तरे भावित-सिद्ध-मार्गः ।
वाराणसी मोक्ष-करी च तत्र तत्रैव गङ्गा-बुधि-सङ्गमं च ॥
पादारविन्दं कुल-सुन्दरीणां देशान्तरे भावित-सिद्ध-मार्गः ।
विहाय लोकेश्वर-मान-भावं मदान्ध-कूपं किमलं विभर्ति ॥
कुरङ्ग-नेत्रासि कुरङ्ग-नेत्रा शिवा भवानीति शिवा भवानी ।
मृगेन्द्र-मध्यासि मृगेन्द्र-मध्या गौरीति भवानि भूयात् ॥
त्वं मारिणी नारकहारिणी त्वं त्वं कालिका कारणकालिका त्वं ।
वैरोंचनी दुःख-विरोचनी त्वं त्वं भैरवी त्वं भुवनेश्वरी त्वं ॥
दिगम्बरा पीन-पयोधरा सा स्मेर-विलासा परि-मुक्त-केशा ।
सदा-शिवा शान्त-गतासनस्था श्यामाभिरामा पुरतो विभाति ॥
श्रीसुन्दरी श्रीचरणारविन्दं विमान-मन्ये न च पूजयामः ।
न जल्पयामो न च कल्पयामो न चाश्रयामो न च देवमन्यम् ॥

जम्बावली पावक-जाल-वर्णा सौदामिनी दाडिम-बीज-वर्णा ।
सुवर्ण-काञ्ची-परि-बध्य-मध्या सिद्धार्चिता सिद्ध-मयी विभाति ।।
कादम्बरी-पान-परायणानां कुलाङ्गनानां वदनारविन्दम् ।
ध्यानं ममैवास्तु सदैव भूयात् तद्-भावना-भावि-भूरि-भक्तिः ।।
त्वमेव बुद्धिश्च त्वमेव वृद्धिस्त्वमेव सिद्धिः स्वयमेव ऋद्धिः ।
परा त्वमेवासि प्रमा त्वमेव प्रमाण-भूतेति च रूपिणी त्वं ।।
त्वं कार्तिकी कौतुक-मूर्तिराप्त्वा मयूर-पृष्ठार्पित-मूर्तिराप्त्वा ।
चन्द्रानना चारु-चकोर-नेत्रा किं स्तौमि मातस्तव पाद-पद्मम् ।।
अत्युग्र-दन्ताग्र-धृतावनिस्त्वं घोरानना घोर-गभीर-नादा ।
संहार-विस्तार-विधान-कर्त्री वाराहि ! मातस्त्विदमेव सर्वम् ।।
कालस्त्वमेवासि त्वमेव काष्ठा त्वमेव चात्मासि मनस्त्वमेव ।
श्रीब्रह्म-शक्तिः स्वयमेव मातः सत्य-स्वरूपासि जगत् करोषि ।।
त्वं वैष्णवी विष्णु-स्वरूपिणी त्वं त्रैलोक्य-रक्षा-करणैक-दक्षा ।
मृगेन्द्र-रूढा घन-नील-वर्णा विश्वस्य रक्षा ह्यनिशं त्वमेव ।।
नाना-कला-केलि-सुलोल-साङ्गी पीन-स्तनी चन्द्रमुखी कदाचित् ।
न विस्मरामि न च विस्मरामि न विस्मरामि कल-हंस-नादा ।।
गतिस्त्वमेवासि गतिस्त्वमेव मतिस्त्वमेवासि मतिस्त्वमेव ।
स्मृतिस्त्वमेवासि स्मृतिस्त्वमेव धृतिस्त्वमेवासि धृतिस्त्वमेव ।।
मासोऽसि वर्षोऽसि युगोऽसि कल्पो मन्वन्तरस्त्वं प्रलयो मुहूर्तः ।
त्वं काल-रात्रिश्चिर-रात्रिरेव एकार्णवः काल-मयी त्वकालः ।।
वर्णेश्वरी त्वं पुर-वासिनी च पुराश्रया पूर्ण-मयी त्वमेव ।
त्वमुग्रतारैक-जटा त्वमेव त्वमुन्मुखी नील-सरस्वती ।।

सर्पासिना सर्प-विभूषणैव धूमावती त्वं भवसीति मातः।
मातङ्गिनी त्वं बगला च मातस्त्वमेव काली करवालिनी च ॥

कात्यायनी काम-कला जयन्ती सावित्रि-वर्णा मधु-मांस-लुब्धा।
त्वमन्न-पूर्णा नव-दुर्गिका च कामात्मिका काम्रवती त्वमेव ॥

गणेश्वरः षड्-वदनं कुबेरो धनेश-पुत्रो रविजो जयन्तः।
त्वं चित्रगुप्तोऽसि भवस्य कर्ता यतीश्वरो वेद-मयी त्वमेव ॥

त्वमेव सर्वोऽसि वदामि किं त्वां त्वमेव सर्वासि वदामि किं त्वां।
त्वमेव सर्वं तव किं ततो वलिंगाव्यलिंगोऽम्ब ! त्वमेव सर्वं ॥

इदं स्तवेन्द्रं नियतं सुपठ्यं भक्तैक-चिह्नं सततं पठेद् यः।
पीक-स्वरः सर्व-जनानुरागो दाता विनीतो गुरु-देव-भक्तः ॥

शतावधानो रण-काल-रुद्रो जिह्वाग्र-वाणीर्युवती-पतिश्च ।
स सर्वकः सर्व-रसान्वितोऽपि पूर्ण-सुशिल्पा पर-लोक-विष्णः ॥

॥ श्रीशक्ति-स्तोत्रं समाप्तम् ॥

## पात्र-वन्दना *

( प्रथम )

ब्रह्माण्ड-मण्डलाकारं पात्रं नौमि परं सुधाम् ।
सुधया पूरितं साक्षात् आयुर्वित्तं प्रयच्छ मे ॥

ॐ इदं ते पात्रं सनवित्तमिन्द्र पिबा सोममेना शत-क्रतो ।
पूर्ण आहावो मदिरस्य मध्वोऽयं विश्व इर्दभिहर्यन्ति देवाः ॥
कुं कुण्डलिनी मुखे जुहोमि स्वाहा ॥ १

द्वितीये त्रिपुरा-पात्रे शिवोऽहं परि-चिन्तयेत् ।
दहन्ति सर्व-पापानि रुद्र-रूपः प्रजायते ॥

ॐ हिरण्य-पात्रं मधोः पूर्णां ददाति मधव्यो सानिति एकधा ।
ब्रह्मण उपहरति एक चैव यजमान आयुस्तेजो दधाति ॥
कुं कुण्ड० ॥ २

तृतीये भैरवे पात्रे वीर-वेशो महा-हरिः ।
दुरितं विलयं यान्ति रक्षां कुर्वन्ति सर्वदा ॥

ॐ श्रावयेदस्य कर्णा वाजयध्यै जुष्टामनु प्रदिशं मन्दयध्यै ।
उद्वा वृषांणो राधसे तुविष्मान् करन्न इन्द्रः सुतीर्था भयं च ॥
कुं कुण्ड० ॥ ३

---

* यह वैदिक पात्र-वन्दना अति प्राचीन है ।

चतुर्थे सोम-पात्रे तु चन्द्र-सूर्यौ विचिन्तयेत् ।

समुद्राः शोषिताः सर्वे सुखं तिष्ठन्ति केवलं ।

ॐ आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि ॥

योऽहमस्मि ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि ॥

अहमेवाहं मां जुहोमि स्वाहा ॥ कुं कुण्ड० ॥ ४

गणेशं पञ्चमं पात्रं सिद्धि-मुक्ति-प्रदायकं ।

गन्ध-पुष्पार्चितं कृत्वा गङ्गया कृत-निर्मलं ॥

ॐ जात-वेदसे सुनवाम सोममरातीयतो नि दहाति वेदः ।

स नः पर्षदति दुर्गाणि विश्वानावेव सिन्धुं दुरितात्यग्निः ॥

कुं कुण्ड० ॥ ५

षष्ठं चैवाग्नि-पात्रं तु मूल-मन्त्राभिमन्त्रितं ।

भस्मी करोतु शत्रूणां पुत्र-पौत्रादि-वर्द्धनं ॥

ॐ आ कलशा अनूषतेन्दो धाराभिरोजसा ।

ऐन्द्रस्य पीतये विश ॥ कुं कुण्ड० ॥ ६

सप्तमे सागराः सप्त सप्त-द्वीपा वसुन्धरा ।

सप्त व्यवर्तते पुण्यं अधिष्ठानं करोति च ॥

ॐ यस्य ते मद्यं रसं तीव्रं दुहन्त्यद्रिभिः ।

स पवस्वाभि मातिहा ॥ कुं कुण्ड० ॥ ७

अष्टमेऽष्ट-महा-सिद्धिः नव-निधिः प्रजायते ।

ब्रह्मा विष्णुश्च रुद्रश्च सेवितां भुक्ति-भाक् भवेत् ॥

ॐ आप्यायस्व समेतु ते विश्वतः साम वृषंण्यं ।
भवा वाजस्य संगथे ।। कुं कुण्ड० ।। ८

नवमे नव-दुर्गास्तु नव-नाथस्तु संस्तुतं ।
भुक्ति-मुक्ति-प्रदं लोके सायुज्यं च स-लोकतां ।।

ॐ मधु-वाता ऋतायते मधु क्षरति सिन्धवः ।
माध्वीर्नः सन्त्वोषधीः ।।
मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः ।
मधुद्यौरस्तु नः पिता ।।
मधुमान्नो वनस्पतिर्मधुमाँ अस्तु सूर्यः ।
माध्वीर्गावो भवन्तु नः ।

कुं कुण्ड० ।। ९

## पात्र-वन्दना ❀

(द्वितीय)

श्रीनाथादि-गुरु-त्रयं गण-पतिं पीठ-त्रयं भैरवम् ।
सिद्धौघं वटुक-त्रयं पद-युगं दूती-क्रमं मण्डलम् ।।
वीरानष्ट चतुष्क-षष्टि नवकं वीरावली-पञ्चकम् ।
श्रीमन्मालिनि-मन्त्र-राज-सहितं वन्दे गुरोर्मण्डलं ।।

---

❀ यह सर्व-मान्य पात्र-वन्दना है। इस वन्दना में चौरासी पात्रों तक की वन्दना मिलती है, परन्तु प्रचार इन्हीं ग्यारह वन्दनाओं का है। इन वन्दनाओं में भी पाँच से ग्यारह तक की वन्दनाओं में बहुत विभिन्नता पाई जाती है और पाठान्तरों का तो कोई ठिकाना ही नहीं है।

कहीं-कहीं यह पात्र-वन्दना पढ़ते समय प्रत्येक वन्दना के अन्त में 'जुहोमि' करने से पहले निम्न-लिखित पाँच श्लोकों का भी पाठ करते हैं—

इदन्ता पात्र-संभूतमहन्ता परमामृतम् ।
पराहन्ता-मये वह्नौ जुहोमि शिव-रूपिणि ।। १

इदं पवित्रममृतं पिबामि भव-भेषजम् ।
पशु-पाश-समुच्छेद-कारणं भैरवोदितम् ।। २

श्रीमद्-भैरव-शेखरे प्रविलसच्चन्द्रामृताप्लावितम् ।
क्षेत्राधीश्वर-योगिनी-गण-महा-सिद्धैः समाराधितम् ॥
आनन्दार्णवकं महात्मकमिदं साक्षात्-त्रिखण्डामृतं ।
वन्दे श्रीप्रथमं कराम्बुज-गतं पात्रं विशुद्धि-प्रदम् ॥
ॐ आत्म-तत्वं शोधयामि स्वाहा ॥ १

हैमं सिन्धु-रसावहं दयितया दत्तं च पेयादिभिः ।
किञ्चिच्चञ्चल-रक्त-पङ्कज-दृशा सानन्दमुद्वीक्षितम् ॥
वामे स्वादु विशुद्ध-शुद्धि-सकलं पाणौ विधायात्मके ।
वन्दे पात्रमहं द्वितीयमधुनानन्दैक-सम्वर्द्धनम् ॥
ॐ विद्या-तत्वं शोधयामि स्वाहा ॥ २

सर्वाम्नाय-कला-कलाप-कलितं कौतूहल-द्योतकम् ।
चन्द्रोपेन्द्र-महेन्द्र-शम्भु-वरुण-ब्रह्मादिभिः सेवितम् ॥
ध्यातं देव-गणैः परं मुनि-गणैर्मोक्षार्थिभिः सर्वदा ।
वन्दे पात्रमहं तृतीयमधुना स्वात्मावबोध-क्षमम् ॥
ॐ शिव-तत्त्वं शोधयामि स्वाहा ॥ ३

---

चित्तेः स्वातंत्र्य-सारत्वाद् तस्यानन्द-मयत्वतः ।
यन्मयत्वाच्च भावानां भावाश्चान्तर्हिता रसे ॥३॥
स्व-स्वातंत्र्य-विकासाय सुरसः तेन पीयते ।
तस्मादिमां सुधा-रूपां पूर्णाहन्तां पिवाम्यहम् ॥४॥
स्वात्म-मूल-त्रिकोणस्थे कोटि-सूर्य-सम-प्रभे ।
कुण्डल्याकृति-चिद्-रूपे हुनेद् द्रव्यं स-मन्त्रकम् ॥५॥

मद्यं मीन-रसावहं हरिहर-ब्रह्मादिभिः पूजितम् ।
मुद्रा-मैथुन-धर्म-कर्म-निरतं क्षाराम्ल-तिक्ताश्रितम् ॥
आचार्याष्टक-सिद्ध-भैरव-कला-न्यासेन संशोधितम् ।
पायात् पञ्च-मकार-तत्व-सहितं पात्रं चतुर्थं नमः ॥

ॐ प्रकृति-तत्त्वं शोधयामि स्वाहा ॥ ४

आधारे भुजगाधिराज-वलये पात्रं मही-मण्डलम् ।
मद्यं सप्त-समुद्र-वारि-पिशितं चाष्टौ च दिग्दंतिनः ॥
सोहं भैरवमर्चयाम्यनुदिनं तारागणैरक्षतै—
रादित्य-प्रमुखैः सुरासुर-गणैराज्ञाकरैः किंकरैः ॥

ॐ पुरुष-तत्त्वं शोधयामि स्वाहा ॥ ५

छत्रं चामर-भद्र-पीठ-परमानन्दोदयं दायकम् ।
रम्यं राज्य-करं सदा सुख-करं साम्राज्य-सायुज्यदं ॥
नाना-व्याधि-भवान्धकार-हरणं जन्मांतर-ध्वंसनम् ।
श्रीमद्-भैरव-भैरवी प्रियतमं पात्रं च षष्ठं नमः ॥

ॐ मनस्तत्वं शोधयामि स्वाहा ॥ ६

जाग्रत्-स्वप्न-सुषुप्ति-तूर्य-परतश्चैतन्य-साक्षि-प्रदम् ।
विद्युद्भास्कर-चन्द्र-वह्नि-धनुषो ज्योतिष-कलाव्यापितं ।
ईडा-पिङ्गल-मध्यगा त्रिवलया यत्कुण्डली चोर्द्धगा ।
पात्रं सप्त-समुद्र-रत्न-तरुणानन्द-प्रदं पातु माम् ॥

ॐ बुद्धि-तत्त्वं शोधयामि स्वाहा ॥ ७

खड्गं श्रीगुरु-पादुकां च तिलकं कण्ठेऽपि सारस्वतं ।
शत्रोर्वर्गबल-शौर्य-बुद्धि-हरणं देह-स्थिते कारणम् ।।
वाञ्छा-सिद्धि-करं मनःस्थिर-करं चाकर्षणं योषितां
पात्रं चाष्टममष्ट-सिद्धि-करणं वन्दे प्रतापालयम् ।।
ॐ अहंकार-तत्वं शोधयामि स्वाहा ।। ८

सर्वानन्द-करं सदा शिव-पदं सर्वार्थ-सम्पत्-प्रदं ।
साम्राज्यार्थ-करं समस्त-सुखदं चाज्ञान-विध्वंसनं ।।
आयुः-कीर्ति-यशो-विवर्द्धन-करं संसार-मोहच्छिदं ।
पात्रं लक्ष-गुणात्मकं च नवमं प्रौढ़-प्रतापं भजे ।।
ॐ शक्ति-तत्वं शोधयामि स्वाहा ।। ९

ब्रह्मा-विष्णु-महेशानां देवानां च विशेषतः ।
दुर्लभं पावनं पात्रं दशमं प्रणमाम्यहम् ।।
ॐ भैरव-तत्वं शोधयामि स्वाहा ।। १०

पापघ्नं शान्ति-शुभदं दिव्यं स्वादु-सुखालयं ।
पात्रमेकादशं वन्दे गुरु-सेवा-सुखागतं ।।
ॐ सर्वं-तत्त्वं शोधयामि स्वाहा ।। ११

## पात्र-वन्दना *

(तृतीय)

श्यामे श्याम-रते शवासन-गते मुण्डाब्ज-मालावृते ।
सश्वन्मुक्त-कचे करावृत-कटि-प्रान्ते विमुक्ताम्बरे ।।
खड्गश्चिच्छन्न-शिरो वराभय-करे शावावतंसे मुदा ।
पात्रं त्वं प्रथमं गृहाण सुधया पूर्णं दयाधीयतां ।।
कां कालिकायै पात्रं समर्पयामि नमः ।
कारणं परमं दिव्यं भव-भैषज-समन्वितं पिवामि जगतां
मातः ! प्रसन्ना भव भवात्मिके कुं कुण्डलनी-मुखे
इष्ट-देवता-स्वरूपे जिह्वाग्रे जुहोमि स्वाहा ।। १

तारे तार-कुचे शवासन-गते रक्त-त्रिनेत्रान्विते ।
पिङ्गोग्रैक-जटे विकाशि-वदने शार्दूल-चर्मावृते ।।
खर्वे कर्तरिकासि-मुण्ड-नलिने राजत्-करे नीलभे ।
मातः पात्रमिदं गृहाण सुधया पूर्णं द्वितीयं मुदा ।।
तां तारायै पात्रं समर्पं० ।। २

---

* यह दश-महाविद्या आदि की पात्र-वन्दना है । कहीं-कहीं द्वितीय पात्र-वन्दना के साथ मिलाकर इस वन्दना को साधक पढ़ते हैं ।

बाले बाल-दिनेश-कोटि-रुचिरे बालार्क-बिम्बाम्बरे ।
पाशेष्वास-शरांकुशान्वित-करे बालेन्दु-राट्-शेखरे ।।
हाला-घूर्णित-लोचन-त्रय-युते नाना-विभूषान्विते ।
पात्रं पूर्णमिदं गृहाण सुधया मातस्तृतीयं मुदा ।।

श्रीं महा-विद्यायै० ।। ३

शोणे श्रीभुवनेश्वरि त्रिनयने बन्धूक-पुष्पाम्बरे ।
पाशाभीति-वरांकुशान्वित-करे तारेश-भाल-स्थले ।।
काञ्ची-कुण्डल-कङ्कणांगद-रणन्मञ्जीर-हारोज्ज्वले ।
पीनोत्तुङ्ग-कुचे सहास-वदने पात्रं चतुर्थं भजे ।।

ह्रीं भुवनेश्वर्यै० ।। ४

मातर्भैरवि शोणभे शशि-धरे स्मेरानने तीक्ष्णे ।
रक्तालिप्त-कुचेति शोण-वसने मुण्डाब्ज-माला-धरे ।।
विद्याभीति-वरांस्तथा जप-वटीं हस्तैर्दधाने शिवे ।
पात्रं वारिजगे गृहाण सुधया पूर्णं मुदा पञ्चमं ।।

भैं भैरव्यै० ।। ५

देवि छिन्न-गले पतत-स्व-रुधिरं पातुं विवृत्ताननं ।
भालं मुक्त-कचं निजं निज-करे वामे दधाने मुदा ।।
भानुस्थ-स्मरगे समीक्ष्य च निजे सख्यौ च मोदान्विते ।
पात्रं स्वीकुरु षष्ठमेतदमलं मातः सुधा-पूरितं ।।

छिं छिन्नमस्तायै० ।। ६

धूम्रे रूक्ष-विलोचन-त्रय-युते क्षुद्-व्याकुले चञ्चले ।
छुश्चित्तेऽरि-भयावहे कलि-रते म्लानाम्बरे रूक्षभे ।।
नीले मुक्त-शिरोरुहे सु-दशने सूर्पोदरि स्वोदिते ।
पात्रं सप्तमिदं गृहाण सकलानन्द-प्रदं ते नमः ।

धूं धूमावत्यै० ।। ७

मातः श्रीवगलामुखि त्रि-नयने स्वर्णाम्बरे स्वर्णभे ।
सौवर्णासनगे सुधांशु-मुकटे चम्प-स्रजा सुप्रभे ।।
पाशं मुद्गरकं विशाल-रसनां वज्रं दधाने करैः ।
नाना-भूषण-भूषिते प्रियतमं पात्रं गृहाणाष्टकम् ।।

वं वगलामुख्यै० ।। ८

मातङ्गि श्याम-देहे शुक-कल-लपिते सावधाने दधाने ।
पाथोब्जे पादमेकं मधु-मद-मुदिते शङ्ख-पात्रावतंसे ।
वीणा-वादानुरक्तेऽरुण-लसित-पटे रत्न-पीठोपरिस्थे ।
मातः स्वीकार्यमेतन्नवममलि-भृतं पात्रमाबद्धमौले ।।

मां मातंग्यै० ।। ९

मातः श्रीकमले सरोरुह - गतेस्मेराननांभोरुहे ।
कञ्ज-द्वन्द्व-वराभयान्वित-करे विद्युद्विलासोज्ज्वले ।।
पीनोत्तुङ्ग-कुचे कटाक्ष-विभवैश्चित्तं मुरारेर्वशं ।
कुर्वाणो दशमं गृहाण विमलं पात्रं सु-हारान्विते ।।

कं कमलायै० ।।१०

देवं नाग-निबद्ध-सुन्दर-जटां हस्तैः कृपाणाभये ।
बिभ्राणं त्रिशिखं वरं त्रि-नयनं सस्मेर-पञ्चाननं ॥
सुश्वेतं सरसीरुहो परिगतं चर्माम्बराडम्बरम् ।
शम्भोः पात्रमहं ददामि सुधया चैकादशं पूरितं ॥
शं शम्भवे० ॥११

नाना-भूषण-भूषितं त्रि-नयनं लम्बोदरं तुन्दिलं ।
प्रोद्यत्कोटि-दिवाकर-द्युति-निभं मातङ्ग-वक्त्रोज्ज्वलं॥
विद्याढ्यं दश-बाहुमेक-दशनं राकेश-भाल-स्थलं ।
दिव्यं द्वादशमुत्तमोत्तममहं पात्रं गणेशं भजे ॥
गं गणेशाय० ॥१२

श्रोत्र-प्रोत-सुकुण्डलं त्रि-नयनं दण्डं त्रिशूलायुधं ।
भूषा-पुञ्ज-विराजमान-वपुषं कर्पूर-पुञ्जोज्ज्वलं ॥
बालं श्रीवटुकं प्रसन्न-वदनं स्वच्छाम्बरोल्लासितं ।
पात्रं स्वादु-रसं त्रयोदशमहं संग्राहयामि प्रियं ॥
वं वटुकाय० ॥१३

सिन्दूरारुण-वस्त्र-लेपन-धरं हुङ्कार-भीमाननं ।
श्यामांभोधर-संनिभं त्रि-नयनं सर्पोल्लसत्कुण्डलं ॥
घण्टा स्वच्छ-कलाप-भूषित-कटिं दण्डं दधानं गदां ।
क्षेत्राधीशमहं चतुर्दशमिदं पात्रं समभ्यर्चये ॥
क्षं क्षेत्रपालाय०॥१४

योगिन्यो मथ-मन्थराः कुल-पराः स्मेराननांभोरुहा ।
रक्तालेपन-वस्त्र-भूषण-धराः कार्तस्वरोद्भास्वराः ॥
स्वच्छाकार-विहार-सार-चतुराः प्राज्य-प्रमोदान्विताः।
पात्रं पञ्च-दशं सुधा-रस-भृतं गृह्णन्तु दत्तं मया ॥

यां योगिनीभ्यः ॥१५

निर्द्वन्द्वे नित्य-शुद्धे निरवधि-विभवे निःस्वरूपे निरीहे ।
निर्माये निःकलङ्के निरुपम-विषये निर्गुणे निर्विकारे ॥
स्वेच्छाभूतानुभूते परम-तर-शिवे षोडशं पात्रमेतत् ।
पूर्णं विज्ञान-वादा विमल-तममहं स्वच्छ-वृत्ति जुहोमि ॥

पराम्बायै० ॥१६

पूर्णा श्रीभुवनेश्वरी च कमला श्रीराज-राजेश्वरी ।
पूर्णा भैरव-भैरवी च वटुका तारा तथा कालिका ॥
पूर्णा श्रीवगला च धूम्रवदना श्रीछिन्नमस्ताम्बिका ।
पूर्णं श्रीगुरु-पादुकामृत-रसं श्रीपूर्ण-पात्रं भजे ॥

कुं कुण्ड० ॥१७

## शांति-स्तोत्र

### ( प्रथम )

जयन्तु मातरः सर्वा जयन्तु योगिनी-गणाः ।
जयन्तु सिद्ध-डाकिन्यो जयन्तु गुरवः सदा ।। १
जयन्तु साधकाः सर्वे विशुद्धाः कौलिकाश्च ये ।
समयाचार-सम्पन्ना जयन्तु पूजकाः नराः ।। २
अणिमाद्यश्च सिद्धाश्च नन्दन्तु भैरवादयः ।
नन्दन्तु देवताः सर्वे सिद्ध-विद्याधरादयः ।। ३
ये चाम्नाय-विशुद्धाश्च मन्त्रिणः शुद्ध-बुद्धयः ।
सर्वदानन्द-हृदयः नन्दन्तु कुल-पालकाः ।। ४
नन्दन्तु अणिमा-सिद्धा नन्दन्तु कुल-साधकाः ।
इन्द्राद्या देवताः सर्वे तृप्यन्तु वास्तु-देवताः ।। ५
सूर्य-चन्द्रादयो देवाः तृप्यन्तु मम भक्तितः ।
नक्षत्राणि ग्रहा योगाः करणा राशयश्च ये ।। ६
तृप्यन्तु पितरः सर्वे मासा संवत्सरादयः ।
खेचरा भूचराश्चैव तृप्यन्तु मम भक्तितः ।। ७
अन्तरीक्ष-चरा ये च ये चान्ये देव-योनयः ।
सर्वे ते सुखिनो यान्तु सर्पा नद्याश्च पक्षिणः ।। ८

पशवः स्थावराश्चैव पर्वता कन्दरा गुहाः ।
ऋषयो ब्राह्मणाः सर्वे शान्ति कुर्वन्तु मे सदा ॥ ९

तीर्थानि बहु-प्रसिद्धा ये चान्ये पुण्य-भूमयः ।
वृद्धा पति-व्रता यास्ताः शान्ति कुर्वन्तु मे सदा ॥ १०

शिवं सर्वत्रमेवास्तु पुत्र-दारा-धनादिषु ।
राजानः सुखिनो यान्तु मित्रा नन्दन्तु मे सदा ॥ ११

साधका सुखिनः सन्तु शिवं तिष्ठंतु सर्वदा ।
शुभा मे वन्दिताः सन्तु मित्रा तिष्ठन्तु पूजकाः ॥ १२

॥ श्रीरुद्रयामले शान्ति-स्तोत्रम् ॥

( ११ )

## शान्ति-स्तोत्र

(द्वितीय)

अनादि-घोर-संसार-व्याधि-ध्वंसैक-हेतवे ।
नमः श्रीनाथ-वैद्याय कुलौषधि-प्रदायिने ॥ १
योगिनी-चक्र-मध्यस्थं मातृ-मण्डल-वेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवी-प्रियम् ॥ २
आपदो दुरितं रोगाः समयाचार-लङ्घनात् ।
ते सर्वेऽत्र व्यपोहन्तु दिव्य-चक्रस्य मेलनात् ॥ ३
आयुरारोग्यमैश्वर्यं कीर्तिर्लाभः सुखं जयः ।
कान्तिर्मनोरथश्चास्तु पान्तु सर्वाश्च देवताः ॥ ४
यस्यार्चनेन विधिना किमपीह लोके ।
कर्म - प्रसिद्धमिति नाम - फलं प्रसूते ॥
तं सन्ततं सकल-साधक-चित्त-वृत्तिः ।
चिन्तामणिं कुल - गणाधिपतिं नमामि ॥ ५
रक्ताम्बरं ज्वलन - पिङ्ग - जटा - कपालं ।
ज्वालावली- कुटिल - चन्द्र -धरं प्रचण्डम् ॥
बालार्कं - धातु - कनकाचल - धातु-वर्णम् ।
देवी - सुतं वटुक - नाथमहं भजामि ॥ ६

ऊर्ध्वं ब्रह्माण्डतो वा दिवि भुवन-तले भू-तले निस्तले वा।
पाताले वा तले वा पवन-सलिलयोर्यत्र कुत्र स्थिता वा॥
क्षेत्रे पीठोपपीठादिषु च कृत-पदा धूप-दीपादि-मांसैः।
प्रीत्या देव्यः सदा नः शुभ-बलि-विधिना पान्तु वीरेन्द्र-
वन्द्याः॥७

देहस्थाखिल-देवता गज-मुखाः क्षेत्राधिपा भैरवाः।
योगिन्यो वटुकाश्च यक्ष-पितरो भूता पिशाचा ग्रहाः॥
अन्ये भूचर-खेचरा दिशि-चरा वेतालकाश्चेटका—
स्तृप्यन्तां कुल-पुत्रकस्य पिवतः पानं स-दीपं चरुम्॥८

ब्रह्मा श्री-शेष-दुर्गा ग्रह-वटुक-गणा भैरवाः क्षेत्रपालाः।
वेतालादित्य-रुद्र-ग्रह-वसु-मनु-सिद्धाप्सरो गुह्यकाद्याः॥
भूता गन्धर्व-विद्याधर-ऋषि-पितृ-यक्षासुरा हि प्रभूता।
योगीशाश्चारणाः किंपुरुष-मुनि-सुराश्चक्रगाः पान्तु सर्वे॥९

ये वाम-द्वैत-भावा हरि-चरण-पराः शंकरा शक्तिपा ये।
निद्रावानन्द येषां प्रसरति रसना नित्य-पूजादि-युक्ता॥
कारुण्यं वापि येषां मनसि स-विनयां ये परानन्द-सक्ता।
तेषां लीला महेशी विरतु कुल-रता सर्वतः सर्व-दैत्या॥१०

या दिव्य-क्रम-पालिकाः क्षिति-गता या देवतास्तोयगा।
या नित्यं प्रथित-प्रभाः शिखि-गता या मातरिश्वाश्रयाः॥
या व्योमामृत-मण्डलामृत-मया याः सर्वदा सर्वगा—
स्ताः सर्वाः कुल-मार्ग-पालन-पराः शांतिं प्रयच्छन्तु मे॥११

सत्यं चेद् गुरु-वाक्यमेव पितरो देवाश्च चेद् योगिनी—
प्रीतिश्चेत् पर-देवता च यदि चेद् वेदाः प्रमाणाश्च चेत् ।
शाक्तेयं यदि दर्शनं भवति चेदाज्ञेयमेषास्ति चेत्-
सन्त्यत्रापि च कौलिकाश्च यदि चेत् स्यान्मेजयः सर्वदा ॥

अनेक-कोट्याः कुल-योगिनीनामन्तर्बहिः कौलिक-चक्र-संस्थाः । निपीयमानेन परामृतेन प्रीताः प्रसन्ना वरदा भवन्तु ॥१३

शिवाद्यवनि-पर्यन्तं ब्रह्मादि-स्तम्ब-संयुतम् ।
कालाग्न्यादि-शिवान्तं च जगद्यज्ञेन तृप्यतु ॥ १४

नन्दन्तु साधक-कुलान्वय-दर्शका ये ।
सृष्ट्याद्यनाख्य-चतुरुक्त-महान्वया ये ॥
नन्दन्तु सर्व-कुल-कौल-रताः परे ये—
ऽप्यन्ये विशेष-पद-भेदक-शाम्भवा ये ॥ १५

नन्दन्तु सिद्ध-गुरवः स्व-गुरु-क्रमौघा ।
ज्येष्ठानुगाः समयिनो वटुकाः कुमार्यः ॥
षड् - योगिनी - प्रवर- वीर - कुले प्रसूता ।
नन्दन्तु भूमि-पति-गो-द्विज-साधु-लोकाः ॥ १६

नन्दन्तु नीति-निपुणा निरवद्य-निष्ठा ।
निर्मत्सरा निरुपमा निरुपद्रवाश्च ॥
नित्यं निरन्तर-रता गुरवो निरीहाः ।
शाक्ताश्च शान्त-मनसो हृत-शोक-शङ्काः ॥ १७

नन्दन्तु योग-निरताः कुल-योग-युक्ताः ।
आचार्य - सामयिक - साधक - पुत्रकाश्च ।।
गावो द्विजा युवतयो यतयः कुमार्यो ।
धर्मे भवन्तु निरता गुरु-भक्ति-युक्ता ।। १८

यजन्ति देव्यो हर-पाद-पङ्कजं प्रसन्न-धामामृत-मोक्ष-दायकम् । अनन्त-सिद्धान्त-मय-प्रबोधकं नमामि चाष्टाष्टक-योगिनी-गणं ।। १९

सम्पूजकानां प्रतिपालकानां यतीन्द्र-योगीन्द्र-तपोधनानाम् । देशस्य राष्ट्रस्य कुलस्य राज्ञः करोतु शान्ति भगवान् कुलेशः ।। २०

शिवमस्तु सर्व-जगतां पर-हित-निरता भवन्तु भूतगणाः ।
दोषाः प्रयान्तु शान्ति सर्वत्र जनाः सुखिनो भवन्तु ।।
दासतां यातु भूपालः शत्रवो यान्तु हीनताम् ।
जगति वश्यमायान्तु विघ्ना नश्यन्तु सर्वतः ।।
कुलाभिनन्दिनो प्रीता कुलीना सन्तु पूजकाः ।
शक्तिः भक्ति-समायुक्ता सुखं जीवन्तु साधकाः ।।

।। देवी-रहस्ये एकविंश-पटले शान्ति-स्तोत्रं ।।

## वीर-वन्दनाष्टक ❋

जगत्त्रयाभ्यर्चित-शासनेभ्यः परार्थ-सम्पादन-कोविदेभ्यः
समुद्धृत-क्लेश-महोरगेभ्यो नमो नमः साधक-नायकेभ्यः।
प्रहीण-सर्वास्रव वासनेभ्यः सर्वार्थ-तत्वोदित-साधनेभ्यः
सर्व-प्रजाभ्युद्धरणोद्यतेभ्यो नमो नमः साधक-नायकेभ्यः ।
निस्तीर्ण-संसार-महार्णवेभ्यः तृष्णा-लतोन्मूलन-तत्परेभ्यः
जरा-रुजा-मृत्यु-निवारकेभ्यो नमो नमः साधक-नायकेभ्यः
सद्धर्म-रत्नाकर-भाजनेभ्यो निर्वाण-मार्गोत्तम-देशिकेभ्यः
सर्वत्र सम्पूर्ण-मनोरथेभ्यो नमो नमः साधक-नायकेभ्यः ।
लोकानुकम्पाभ्युदितादरेभ्यः कारुण्य-मैत्री-परिभावितेभ्यः
सर्वार्थ-चर्या-परिपूरकेभ्यो नमो नमः साधक-नायकेभ्यः ।
विध्वस्त-निःशेष-कुवासनेभ्यो ज्ञानाग्निना दग्धमलेंधनेभ्यः
प्रज्ञा-प्रतिज्ञा-परिपूरकेभ्यो नमो नमः साधक-नायकेभ्यः ।
सर्वार्थिताशा-परिपूरकेभ्यो वैनेय-पद्माकर-बोधकेभ्यः
विस्तीर्ण-सर्वार्थ-गुणाकरेभ्यो नमो नमः साधक-नायकेभ्यः
अनंत-कर्मार्जित-शासनेभ्यो ब्रह्मेंद्र-रुद्रादि-नमस्कृतेभ्यः
परस्परानुग्रह-कारकेभ्यो नमो नमः साधक-नायकेभ्यः ॥

॥ देवी-रहस्ये वीर-वन्दनाष्टकम् ॥

---

❋ शान्ति-स्तोत्र के वाद साधक इस स्तोत्र से वीरों की वन्दना करता है।

## आनन्द स्तोत्र ❋

ॐ नमास्यहं मङ्गल-योग-मुद्रां सौन्दर्य-लक्ष्मीं भुवि वैजयन्तीम् ।
श्रीसुन्दरीमिन्दु-कलावतंसां सानन्दमानन्द-मयीं स्मरामि ॥
श्रीसुन्दरी-पूजन-तत्पराणां हालाभिराघूर्णित-लोचनानाम् ।
अस्माकमानन्दित-मानसानां माहेश्वराणां दिवसाः प्रयान्तु ॥
निधाय धारां वदने सुधानां श्रीचक्रमभ्यर्च्य कुल-क्रमेण ।
आस्वाद्य मद्यं पिशितं मृगाक्षीमालिंग्य मोक्षं सुधियः प्रयान्ति ।
दिने दिने तीर्थ-घटोऽस्तु पूर्णो दिने दिने तर्पणमस्तु देव्याः ।
दिने दिने संघटतां द्वितीयं दिने दिने साधक-सङ्गमोऽस्तु ॥
आस्वादयन्तः पिशितस्य खण्डमाकण्ठ-पूर्णं मदिरां पिवामः ।
वामेक्षणा-सङ्गममादधाना भुक्तिञ्च मुक्तिञ्च वयं व्रजामः ॥
न स्वादु-लाभः पिशितस्य यस्मिन् प्रवर्तते हेतु-कथा न यस्मिन् ।
न यत्र सङ्गो मृग-लोचनायास्तद्-तद्-दिनं दुर्दिनमेव मन्ये ॥
अनन्तरं काल-वशाच्च योहम् सोऽहं भविष्यामि न मे विषादः ।
श्रीसुन्दरीं तां सततं स्मरामि दिनं तु तद्-भैरव सोऽहमेव ॥

---

❋ पञ्चम-पात्र की वन्दना के बाद श्री-कुल में पात्र-वन्दना पढ़ने की परिपाटी नहीं है । उल्लास-काल में श्री-कुल के साधक आनन्द-स्तोत्र, पात्र-प्रशंसा एवं चक्राष्टक आदि स्तवों का पाठ करते हैं ।

उन्मूलनं पातक - भूरुहाणाम् उन्मीलनं चित्त - कुतूहलानाम् ।
आकर्षणं पङ्क - रुहेक्षणानां मैरेय - पानं वयमाचरामः ॥

वाराणसी - जन्हुसुता - प्रयाग - गोदावरी-तीर्थ-विलोकनानि ।
तेनैव मन्ये जगतः कृतानि श्रीसुन्दरी - चिन्तनमेव यस्य ॥

आयात - यातेन भवाम्बु - राशौ जातो महानेष मम प्रयासः ।
मोक्षाय नाथस्य पद - प्रसादादंगीकृतः सम्प्रति कौल-मार्गः ॥

नान्यं भजेऽहं न तथान्यमीहे नान्यं स्मरे नो परमाश्रयामि ।
कदापि नाहं परमार्थ-भावां श्रीसुन्दरीं चेतसि विस्मरामि ॥

विलिख्य सिन्दूर-मयं सुराभिः श्रीचक्रमित्थं निशि तर्पयन्तः ।
श्रीसुन्दरीं चेतसि चिन्तयन्तः कृपावलोकैर्वशयन्ति लोकान् ॥

यत्रास्ति भोगो न च तत्र मोक्षो यत्रास्ति मोक्षो न च तत्र भोगः
श्रीसुन्दरी - तर्पण - तत्पराणां भोगश्च मोक्षश्च करस्थ एव ॥

जिह्वायां जप - साधनं परिणतिः कौल - क्रमाभ्यासतो ।
यः शान्तो नियतं पिवेत्तदमृतं भुक्तिं च मुक्तिं व्रजेत् ॥

करे पात्रं मुखे स्तोत्रं आनन्दं हृदयाम्बुजे ।
मूर्ध्नि श्रीगुरु-चिन्ता च चिन्तनं किमतः परम् ॥

करे माला मुखे हाला वामे बाला सु-कोमला ।
हृदये त्रिपुरा बाला अन्न - शाला गृहे गृहे ॥

अकुल - कुलमयन्ती चक्र - मध्ये स्फुरन्ती ।
मधुर - मधु पिवन्ती साधकान् तोषयन्ती ॥
दुरितमपहरन्ती कण्टकान् चर्वयन्ती ।
जयति जय वदन्ती सुन्दरी क्रीडयन्ती ॥

॥ आनन्द-स्तोत्रम् कुलार्णवे ॥

## उल्लास-स्तवन

अलि - पिशित पुरन्ध्री भोग - पूजा - परोऽहम् ।
बहु - विध - कुल - मार्गारम्भ-सम्भावितोऽहम् ।।
पशु - जन - विमुखोऽहं भैरवीमाश्रितोऽहम् ।
गुरु - चरण - रतोऽहं भैरवोऽहं शिवोऽहम् ।। १

सकल - विबुध - दीक्षा - मन्त्र-शुद्धात्मकोऽहम् ।
विविध - विबुध - वर्य - प्रार्थि-मार्गोन्मुखोऽहम् ।।
विमल - तर - तरोऽहं सुन्दरी - तत्परोऽहम् ।
गुरु - चरण - रतोऽहं भैरवोऽहं शिवोऽहम् ।। २

सहज - पद - परोऽहं पूज्य - पूज्यात्मकोऽहम् ।
बहुल - सुख - मयोऽहं सच्चिदानन्दितोऽहम् ।।
शिव - शरण - गतोऽहं भक्ति - लोकार्चितोऽहम् ।
गुरु - चरण - गतोऽहं भैरवोऽहं शिवोऽहम् ।। ३

शिवोऽहं शक्ति - रूपोऽहं देवोऽहं दनुजोऽप्यहम् ।
यक्षोऽहं मनुजश्चाहं सर्वोऽहं सर्वदास्म्यहम् ।। ४

मन्त्रोऽहं मन्त्र - कल्पोऽहं मन्त्र - जाप्यहमेव च ।
मन्त्र-कृन्मन्त्र-विच्चाहं मंत्रानंदात्म्यकोस्म्यहम् ।। ५

पूजोऽहं पूज्य - रूपोऽहं पूजकोप्यहमेव च ।
पूजा-कृच्चास्मि पूजा-वित्-पूजा-रस-मयोऽप्यहम् ॥ ६

एकेन शुष्क - चणकेन घटं पिवामि ।
वापीं पिवामि सहसा लवणार्द्रकेन ॥
आस्वाद्य मांसमलि - रोहित - मत्स्य - खण्डम् ।
गङ्गां पिवामि यमुनां सह सागरेण ॥ ७

वामे चन्द्र-मुखी मुखे च मदिरा पात्रं कराम्भोरुहे ।
मूर्ध्नि श्रीगुरु-चिन्तनं भगवती-ध्यानास्पदं मानसम् ॥
जिह्वायां जप-साधनं परिणतिः कौल-क्रमाभ्यासने ।
ये सन्तः नियतं पिवन्ति सरसं ते भुक्ति-मुक्ती गताः ॥८

पीत्वा पीत्वा पुनः पीत्वा यावत्पतति भूतले ।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥९

वामे रामा रमण-कुशला दक्षिणे चालि-पात्रम् ।
अग्रे मुद्राश्चणक - वटकौ शूकरस्योष्ण - शुद्धिः ॥
स्कन्धे वीणा सरस-मधुरा सद्-गुरोः सत्कथायाम् ।
कौलो मार्गः परम - गहनो योगिनामप्यगम्यः ॥१०

॥ श्रीबाला-त्रिपुर-पद्धतौ उल्लास-स्तवनं ॥

## चक्राष्टक

भूदेवा यत्र देवा सुललित - वदना दिव्य - कंन्यायमाना
सामोदा गीत - गाना विदधति विविधं विप्र-वत्-सर्व - वर्णाः ॥
द्वारे सायुज्य - मुक्तेर्हरि - हर - विधिभिः सर्वदा सेव्यमानम् ।
श्रीचक्रं सम्प्रवर्त्यं जगति विजयते दैवतं देवतानाम् ॥
यामे यामे निशायां सकल - पशु - जनो घोर - निद्रामवाप्तः ।
सिद्धान्ते शुद्ध - भूमौ मधुर - मधु - भरा चन्दनानेक - पुष्पैः ॥
सामोदे जायमाने सपदि परिणतं शाम्भवैर्योगिनीभ्यः ।
श्रीचक्रं सम्प्रवर्त्यं जगति विजयते सिद्धिदः साधकानाम् ॥
मार्गाणां चन्द्र - चूडः स भवतु तपसा दुर्लभं देवतानाम् ।
स्वच्छन्दं विश्व - मातः तव पद - कृपया शम्भु - मार्गे चरामः ॥
तस्मादागत्य चक्रे गुरु - पद - कमले विद्विषां काल-रात्रिः ।
भूत्वा भूत - प्रबुद्धा प्रभव - भव- हरे देवि ! नः पाहि पाहि ॥
आधारे चक्र - वह्नौ परम - दश - कला द्वादशार्कस्य पात्रे ।
पीयूषे षोडशेन्दुरभि - रमणि कला - देवतां पूजयामि ॥
यज्ञे जातेन शक्ति शिरसि शिरसि ये शम्भुना सामरस्यं ।
नेत्रे द्वाराति - वजं विगलितममृतम् योजयामः कलानाम् ॥
बालां बालार्क-वर्णां कुच-भर - नमितां कुंकुमारक्त - वस्त्राम् ।
दिव्यालङ्कार - युक्तां चकित - मृग-दृशामंकुशं पञ्च-वाणान् ॥
पाशं चापं दधानामरुण - कर-तलैः सेव्यमानाङ्ग - यष्टिम् ।
चं चन्द्रार्द्ध-चूडां हिमकर-वदनां सुन्दरीं तां नमामि ॥

दिव्यं द्रव्येन पूर्णां कर-कमल-तले रत्न-पात्रम् स्व-वामे।
दक्षे शुद्धिं दधानां हिमकर-वदनां वर्ण-विश्रान्त-नेत्रां॥
सौन्दर्या देवताया स्तवनमपि सदा नाद-रूपं स्फुरन्तम्।
श्रीचक्रं सम्प्रवर्त्यं जगति विजयते मङ्गलं मङ्गलानाम्॥
मन्दं मन्दं पिवन्ती मधुर-मधु-रसं कामिनी-वक्त्र-पूतम्।
शुद्धार्थं शुद्धि-खण्डं स्मर-हर-दहनं चान्तरे होमयन्तः॥
अन्योऽन्यं भोजयन्तो गत-मल-मनसा सुन्दरीं भावयन्तः।
सर्वे क्रीडन्ति शैवा सुललित-वदनालिङ्गनालिङ्गिताङ्गाः॥
दोषादोषे न विघ्नः तव पद-कृपया कण्ठ-पूर्णं पिवामः।
स्वच्छन्दं दिव्य-रूपः सुललित-वदना स्वादनेनावशिष्टं।
शुद्धे शुद्धिं नराणां सपदि विदधतामन्तराग्नौ जुहोमि।
श्रीचक्रं संप्रवर्त्यं लसदमर-वधू-वृन्दमानन्दयामः॥

॥ श्रीमच्छङ्कराचार्य-विरचितं चक्राष्टकं स्तोत्रम्॥

## नीराञ्जन स्तुति ※

जय देवि ! जय देवि !

जय विश्वाधारे जय विश्वाधारे !

दीनानाथोद्धरण - प्रवणे जन - सारे,

त्वत्पद - पद्मे पद्मे विधृत - व्यापारे !

मयि दीने कुरु करुणां करुणामृत-पारे ।

जय देवि ! जय देवि ॥१॥

अमृतोदधि-मध्य - स्थित - नव - रत्न - द्वीपे,

विष्वक - विकसित - सुर-तरु - चम्पक - नीपे,

नाना - कुसुमामोदिनि ! विधुतागरु - धूपे !

चिन्तामणि - भवनेङ्गण - तिष्ठत्सर-भूपे !

जय देवि ! जय देवि० ॥२॥

माणिक्योज्ज्वल - चत्वर - सिंहासन - शोभे,

शिव-पञ्चक-मञ्चे चित-जन-लोचन-लोभे,

सुश्वेतातप-वरणे चल - चामर - शोभे !

---

※ पूजा के अन्त में नीरांजन के समय साधक मिलकर मधुर स्वर से नीरांजन-स्तुति पढ़ते हैं। श्रीत्रिपुरसुन्दरी-सम्बन्धी यह एक प्राचीन नीरांजन स्तुति है।

ध्याये भवतीमनिशं कृत - जगदारम्भे !
जय देवि ! जय देवि० ॥३॥

दलित - जपा-कुसुमोपम-वसनाच्छन्नाङ्गीम् ।
तरुणारुण-करुणा-प्रद-किरणावलि - भृङ्गीम्,
दधतीं रचनां नयने यमुना - तारङ्गीम् ।
कलयन्तीं कुच-कोशे सुषमा नारंगीम् ।
जय देवि ! जय देवि० ॥४॥

शर - चम्पक - वाणासन-पाशोल्लसिताम् ।
मलयानिल-परिवारित-मुख-पद्म-श्वसिताम् ,
बालाकर - मण्डित - चूडा - तट - महिमां ।
ज्योतिस्त्रितयालंकृत-नयन-त्रय-सहिताम् ।
जय देवि ! जय देवि० ॥५॥

पशुपति - यन्त्रण - पटु-तर - रोमावलि-यूथां ।
मन्मथ - तस्कर - गुप्ति - क्षमन-भी-कूपां ।
प्रमदालम्बि - शिखा - मणि-वृन्दारक-भूपां ।
कमलासन-हरि-हर-मुख-चिन्त्यामित-रूपां ।
जय देवि ! जय देवि० ॥६॥

काली वगला बाला तारा भुवनेशी ।
बाराही मातङ्गी कमला वचनेशी,
छिन्ना दुर्गा गङ्गा काशी कामेशी,
त्वत्तो नान्यत् किञ्चित् क्वचिद्-रसं-पेशी ।

जय देवि ! जय देवि० ॥७॥

त्वं भूमिस्त्वं सलिलं त्वं तेजः प्रबलम् ।
त्वं वायुस्त्वं व्योमस्त्वं चित्तं विमलम् ।
त्वं जीवस्त्वं चेशस्त्वं ब्रह्मा ह्यमलम्,
सत्यानृतयोरन्यत् त्वत्तः किं सकलं ।

जय देवि ! जय देवि० ॥८॥

कुल-कुण्डे त्वं कुरु हे देवि ! प्रस्वापम् ।
स्वाधिष्ठाने मिहिरायुत - दीधित - तापम्,
नीला नाभौ कण्ठे शशिभा - हृत - पापम् ।
वर्षत्यामृत - विन्दावानन्दावापम् ।

जय देवि ! जय देवि० ॥९॥

त्वत्पद-पद्मे चित्तं त्रिपुरे मे रमताम् ।
तत्रैव प्रति-वेलं मौलिर्मे रमताम् ।
यातायातः क्लेशः सद्यः संशमताम् ।
याचे भूयो भूयो भवतामाभवताम् ।

जय देवि ! जय देवि० ॥१०॥

कर-ताली-दानोत्सुक - सुर - विततानन्दे !
नीराजन - काले तव मुनि - जन - नुत-वेदे !
चरणानत - सम्राज्ये परिहृत - भव - खेदे !
विश्व-विलासिनि ! परमाराध्यनि त्वं निर्वेदे ।

जय देवि ! जय देवि० ॥११॥

॥ श्रीत्रिपुर-सुन्दरी नीरांजन-स्तुतिः ॥

## काली-नीरांजना ❋

अयि गिरि-नन्दिनि नन्दित-मेदिनि विश्व-विनोदिनि नन्दि-नुते !
गिरिवर-विंध्य-शिरोधि-निवासिनि विष्णु-विलासिनिजिष्णुनुते !
भगवति हे शित-कण्ठ-कुटुम्बिनि भूरि-कुटुम्बिनि भूत-कृते !
जय जय हे महिषासुर-मर्दिनि रम्य-कपर्दिनि शैल-सुते ।।
अयि जगदम्ब ! कदम्ब-वन-प्रिय-वासिनि वासिनि वास-रते !
शिखर-शिरोमणि-तुङ्ग-हिमालय-शृङ्ग-निजालय - मध्य-गते ।
मधु-मधुरे मधुरे मधुरे मधु-कैटभ-भञ्जनि रास-रते !
जय जय हे महिषासुर-मर्दिनि रम्य-कपर्दिनि शैल-सुते ।।
सुर-वर-र्वाषणि दुर्धर-र्धाषणि दुर्मुख-र्माषणि घोष-रते !
दनु-जन-रोषिणि दुर्मुख-शोषिणि भव-भय-मोचनि सिन्धु-सुते !
त्रिभुवन-पोषिणि शङ्कर-तोषिणि किल्विष-मोचनि हर्ष-रते !
जय जय हे० ।।
अयि शत-खण्ड-विखण्डित-रुण्ड-वितुण्डित-शुण्ड-गजाधिपते !
रिपु-गज- दण्ड - विदारण - खण्ड - पराक्रम - चण्ड - निपातित-
मुण्डमठाधिपते! जय जय हे० ।।
अयि सुमनः सुमनः सुमनः सुमनोरम-कान्ति-युते !
श्रुति रजनी रजनी रजनी रजनी-कर चारु-युते !
सुनयन - विभ्रमर - भ्रमर - भ्रमराधिपते !
जय जय हे० ।।

सुर-ललना-प्रतिथे वितथे वितथनियोत्तर-नृत्य-रते ।
धुधु-कुट धुंगड़-धुङ्गड़-दायक दान-कुतूहल-गान-रते ।
धुंकुट धुंकुट धिद्धिमिति ध्वनि घोर मृदङ्ग-निनाद-रते !
जय जय हे० ॥

जय जय जाप्य-जये जय-शब्द-परिस्तुति तत्तत्पर विश्व-नुते !
झिणि झिणि झिणि झिणि झिकृत नूपुर-झिंजित मोहित भूत-रते!
धुनटित नटार्द्ध-नटी-नट नायक नायक नाटित-नूपुरते !
जय जय हे० ॥

महित महाहव-मल्लिम तल्लिम दल्लित वल्लज भल्ल-रते !
विरचित पल्लिक पुल्लिक मल्लिक झल्लिक-मल्लिक वर्ग-युते ॥
जय जय हे० ॥

कृत कृत कुल्ल-समुल्लस तारण तल्लिज वल्लव साल-लते !
जय जय हे० ॥

या माता मधु-कैटभ-प्रमथिनी या माहिषोन्मूलनी ।
या धूम्रेक्षण-चण्ड-मुण्ड-मथिनी या रक्त-बीजाशनी ॥
शक्तिः शुम्भ-निशुम्भ-दैत्य-दलिनी सा सिद्धि-लक्ष्मी परा ।
सा चण्डी नव-कोटि-शक्ति-सहिता मां पातु विश्वेश्वरी ॥
कालिदास-कविराज-कल्पितं कालिका-स्तवनमिन्द्र-राज्यदम् ।
यः पठेत् प्रति-दिनं नुति-पूर्वं कालिका-हृदय-तुष्टिकृद् भवेत् ॥

॥ कालिदास-कृत त्रिगुणात्मिका-कालिका-स्तोत्रं ॥

## किङ्किणी स्तोत्र*

किं किं दुःखं सकल-जननि ! क्षीयते न स्मृतायाम् ।
का का कीर्तिः कुल-कमलिनि ! प्राप्यते नार्चितायाम् ॥
किं किं सौख्यं सुर-वर-नुते ! प्राप्यते न स्तुतायाम् ।
कं कं योगं त्वयि न तनुते चित्तमालम्बितायाम् ॥१

स्मृता भव - भय - ध्वंसि पूजितासि शुभंकरि ।
स्तुता त्वं वांछितं देवि ! ददासि करुणाकरे ॥२

परमानन्द - बोधाद् - विरूपे ! तेजः - स्वरूपिणि,
देव - वृन्द - शिरो - रत्न - निघृष्ट - चरणाम्बुजे !
चिद्-विश्रान्ति-महा-सत्ता-मात्रे मात्रे नमोऽस्तु ते ॥३

सृष्टि - स्थित्युपसंहार - हेतु - भूते सनातनि !
गुण - त्रयात्मिकासि त्वं जगतः करणेच्छया ॥४

अनुग्रहाय भूतानां गृहीत - दिव्य - विग्रहे !
भक्तस्य मे नित्य-पूजा-युक्तस्य परमेश्वरि ॥५

ऐहिकामुष्मिकीं सिद्धि देहि त्रिदश - वन्दिते !
ताप - त्रय - परिम्लान - भाजनं त्राहि मां शिवे ॥६

---

* अन्तिम पुष्पांजलि के समय साधक लोग प्रायः यही स्तोत्र पढ़ कर पुष्पांजलि अर्पित करते हैं ।

नान्यं वदामि न शृणोमि न चिन्तयामि ।
नान्यं स्मरामि न भजामि न चाश्रयामि ॥
त्यक्त्वा त्वदीय - चरणाम्बुजमादरेण ।
मां त्राहि देवि ! कृपया मयि देहि सिद्धिम् ॥ ७

अज्ञानाद्वा प्रमादाद्वा वैकल्यात् साधनस्य च ।
यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षन्तुमर्हसि ॥ ८

द्रव्य - हीनं क्रिया-हीनं श्रद्धा-मन्त्र - विवर्जितम् ।
तत्सर्वं कृपया देवि ! क्षमस्व त्वं दया-निधे ॥ ९

यन्मया क्रियते कर्म तन्महत् स्वल्पमेव वा ।
तत्सर्वं च जगद्धात्रि ! क्षन्तव्यमयमञ्जलिः ॥ १०

॥ किङ्किणी-स्तोत्रं ॥

## श्री गुरुदेव का ध्यान

श्री-कुल –

श्वेतं श्वेत-विलेप-माल्य-वसनं वामेन रक्तोत्पलम् ।
विभ्रत्या प्रिययेतरेण तरसाश्लिष्टं प्रसन्नाननम् ॥
हस्ताभ्यमभयं वरं च दधतं शम्भु-स्वरूपं परम् ।
हाला-घूर्णित-लोचनोत्पल-युगं ध्याये शिरस्थं गुरुम् ॥

काली-कुल

१ आनन्दमानन्द-करं प्रसन्नं,
ज्ञान-स्वरूपं निज-बोध-युक्तम् ।
योगीन्द्रमीड्यं भव-रोग-वैद्यं,
श्रीमद्-गुरुं नित्यमहं भजामि ॥

२ शुद्ध-स्फटिक-सङ्काशं शुद्ध-क्षौम-विराजितम् ।
गन्धानुलेपनं शान्तं वराभय-कराम्बुजम् ॥
वामो-रुशक्ति-संयुक्तं सर्वाभरण-भूषितम् ।
मन्द-स्मितं गुरुं ध्याये कारुण्येनावलोकितम् ॥

## आवश्यक निर्देश

१—'पात्र-वन्दना' के समय प्रत्येक पात्र के ग्रहण करने के बाद क्या कर्त्तव्य है, इस सम्बन्ध म निम्न निर्देशों को स्मरण रखना चाहिए—

प्रथमे तु गुरोर्ध्यानम्—पहले पात्र में श्री गुरु का ध्यान करे।

द्वितीये स्वेष्ट-चिन्तनम्—दूसरे पात्र में इष्ट-देवता का ध्यान करे।

तृतीये न्यास-जालं च—तीसरे पात्र में षडङ्ग-न्यास व प्राणायाम करे।

चतुर्थे जपमाचरेत्—चौथे पात्र में मूल-मन्त्र का जप करे।

पञ्चमे पूजनं कुर्याद्—पाँचवें पात्र में शक्ति का पूजन करे।

अन्ते पूर्णाहुतिं चरेत्—अन्तिम पात्र में पूर्णाहुति दे।

उक्त निर्देशों का पालन करने में पहले पात्र-वन्दना के साथ पात्रस्थ तीर्थ को ग्रहण करे। तब पात्र को आधार पर रखकर उस पात्र से सम्बन्धित निर्देशानुसार ध्यानादि करे।

तोडल-तन्त्र में इस सम्बन्ध में यह निर्देश है कि—

**प्रति-पात्रे जपेन्मन्त्रमष्टोत्तर-शतं सुधीः ।**

अर्थात् प्रत्येक पात्र के ग्रहण करने के वाद मूल-मन्त्र का १०८ वार जप करे।

२—प्रत्येक पात्र के तीर्थ के साथ ही चर्वण भी ग्रहण करना होता है। इस सम्वन्ध में यह निर्देश है कि—

**प्रदद्यात् प्रथमे पात्रे पिशितं परमेश्वरि !**
**द्वितीये तु वरारोहे ! मत्स्यं दद्यात् सु-साधितम् ।**
**तृतीये तु महेशानि ! मुद्रां दद्यात् मनोरमाम् ॥**
**चतुर्थे परमेशानि ! मांसैर्मत्स्यैश्च मुद्रया ।**
**पञ्चमे तु महेशानि ! दद्यात् मन्त्री यथेच्छया ।**

अर्थात् पहले पात्र के साथ 'मांस-शुद्धि', दूसरे पात्र के साथ 'मत्स्य-शुद्धि', तीसरे पात्र के साथ 'मुद्रा'—अन्नमय पदार्थ, चौथे पात्र के साथ इन तीनों ही वस्तुओं को और पाँचवें पात्र के साथ इच्छानुसार चर्वण ग्रहण करना चाहिये।

३—पाँचवें पात्र को स्व-शक्ति या ज्येष्ठा शक्ति के 'प्रसाद' (तीर्थ) के साथ ग्रहण करना चाहिये और पात्रस्थ अमृत को स्वीकार करने के वाद 'शक्ति-स्तोत्र' का पाठ करे।

छठे पात्र के वाद प्रत्येक पात्र के ग्रहण करने के वाद क्रमशः आनन्द-स्तोत्र, उल्लास-स्तोत्रादि का पाठ करना चाहिए।

हमारे द्वारा 'चण्डी' नामक अनूठी मासिक पत्रिका पिछले ४० वर्षों से प्रकाशित हो रही है।

'चण्डी' पत्रिका मन्त्र, तन्त्र, यन्त्र, शक्ति-उपासना एवं योग-विषयक एकमात्र प्रामाणिक पत्रिका है।

'चण्डी' पत्रिका का वर्ष चैत्र (अप्रैल) मास से प्रारम्भ होकर फाल्गुन (मार्च) में पूर्ण होता है। वर्ष के किसी भी मास में उसके सदस्य बन सकते हैं। नए सदस्य को अप्रैल के अङ्क से लेकर उस मास तक प्रकाशित सभी अङ्क भेज दिये जाते हैं।

विशेष जानकारी के लिये सम्पर्क करें।